ॐ ह्रीँ श्रीधरणेन्द्र–पद्मावतीसहिताय श्रीशंखेश्वरपार्श्वनाथाय नमः ॥



# कुमताहिविषजाङ्गुलीमंत्रः

प्रकाशक :
प्रविणचंद्र अमृतलाल शाह
लींबडी [ सौराष्ट्र ]



प्राप्तिस्थान
शा. जशवंतलाल गीरधरलाल
१२३८ रूपासुरचंदनी पोळ, अमदावाद.

मूल्य रू. 4–०–०



संवत् २००७ जेठ वद ११ सने १९५१ जुन

नीलकमल प्रीन्टरीमां जादवजीभाई मोहनलाल शाहे

छापी, सीवील होस्पीटल सामे, अमदावाद.



ॐ ह्रीं

॥ श्रीगुरुभ्यो नमः ॥

श्रीहीरविजयसूरये श्रीविजयसेनसूरये सम्प्रति विजयमानगच्छाधिराजभट्टारकपुरन्दरसौभाग्यभाग्यवैराग्यादिगुणोलिगाग्रि-
युगप्रधानसमानश्रीविजयदेवसूरये नमः ॥

# ॥ कुमताहिविषयुक्तिजाङ्गुलीमन्त्रः ॥

—०×०—

पूर्वं श्रीविजयदानसूरीणां वचनोत्थापकं तैश्च सम्यग्दत्तशिक्षं साम्प्रतं चैतेषां सूरीणां वचनोत्थापकं केवलिशरीरात् सूक्ष्मबादर-त्रसादिजीवव्यपरोपणं न भवतीति वादिनं प्रति बहून् जिनागमाननुसृत्य किंचिद् ब्रूमहे—

ननु भोस्त्वं वदसि केवलिशरीरात् सर्वथा सूक्ष्मादिजीववधो न भवत्येव तर्हि केवलिनां साधूनां छद्मस्थसाधूनां च पञ्चमहाव्रतविचारे भेदो दर्शनीयस्तत्र तु भेदो न दृश्यते यतः—

**पढमे भंते ! महव्वए सव्वाओ पाणाइवायाओ वेरमणं, सव्वं भंते ! पाणाइवायं पच्चक्खामि, से सुहुमं वा बायरं वा तसं वा थावरं वा नेव सयं पाणे अइवाइज्जा, नेवन्नेहिं पाणे अइवायाविज्जा, पाणे अइवायंते वि अन्ने न**

समणुजाणामि, जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं पि अन्नं न समणुजाणामि तस्स भंते पडिकमामि निंदामि गरिहामि अप्पाणं वोसिरामीत्यालापकपाठस्य श्रीदशवैकालिकाचारांगसूत्रादौ सर्वत्र समानत्वात्।

तथा चतुःशरणप्रकीर्णके—

सव्वजियाणमहिंसं, अरहंता सच्चवयणमरहंता। बंभव्वयमरहंता, अरहंता हुंतु मे सरणं ॥ १ ॥

इति सूत्रं साक्षीकृत्य केवलिशरीराज्जीववधसंभवं निषेधयसि तदपि युक्तिक्षमं न। तत्रैव स्वमतकदाग्रहभूतग्रस्तः किं न पश्यसि? यतः—

हिंसाइदोससुन्ना, कयकारुण्णा सयंभुरुप्पन्ना। अजरामरपहखुण्णा, साहू सरणं सुकयपुण्णा ॥ १ ॥

यथा पूर्वसूत्रेण केवलिशरीराज्जीववधसंभवं निषेधयसि तथैवानेन सूत्रेण छद्मस्थसाधोः शरीराज्जीववधसंभवं कथं न निषेधयसि? तेन जानीमस्तव स्वमतहठ एव मतिरस्ति, न तु तत्त्वबुभुत्सायामिति ॥

तथोपासकदशांगे कुंडकोलिकश्रावकाधिकारे महामाहन इति सूत्रं दर्शयन् मा मुग्धान् जनान् भावानभिज्ञान् वंचय महामाहन इति कोऽर्थः?। आत्मना हनननिवृत्तत्वात् महान् माहनो महामाहनः, एतस्य पदस्य छद्मस्थसाधोरपि विशेषणतया योजने दोषो ज्ञातो नास्ति, जिनवदुक्तविशेषणविशिष्टः छद्मस्थः साधुरप्यस्ति तेनान्वर्थसमानत्वादिति। यथा च त्वं माहनशब्देन साधुं वदसि

**" तथा च माह्नशब्देन साधुं वदसि "** तथा च माह्नशब्देन श्रावकोऽप्युच्यते ।

यतः—श्रीभगवतीप्रथमशतके सप्तमोद्देशकवृत्तौ श्रीअभयदेवसूरयः प्रोचुः—

**जीवे णं भंते ! गब्भगए समाणे देवलोएसु उववज्जेज्जा ?, गोयमा ! अत्थेगइए उववज्जेज्जा, अत्थेगतिए नो उववज्जेज्जा, से केणट्ठेणं ?, गोयमा ! से णं सन्नी पंचिंदिए सव्वाहिं पज्जत्तीहिं पज्जत्तए तहारूवस्स समणस्स वा माहणस्स वा अंतिए एगमवि आयरियं धम्मियं सुवयणं सोच्चत्ति ।**

अस्य वृत्तिर्यथा—**तहारूवस्स** तथाविधस्य, उचितस्येत्यर्थः, **श्रमणस्य**—साधोः, वाशब्दो देवलोकोत्पादहेतुत्वं प्रति श्रमणमाहनवचनयोस्तुल्यत्वप्रकाशनार्थः, **माहणस्सत्ति** मा हनेत्येवमादिशति स्वयं स्थूलप्राणातिपातादिनिवृत्तत्वाद्यः स माहनः, अथवा ब्राह्मणो—ब्रह्मचर्यस्य देशतः सद्भावाद् ब्राह्मणो—देशविरतस्तस्य वा, अंतिएत्ति, समीपे एकमप्यास्तामनेकम्, आर्यं आराद् यातं पापकर्मभ्य इत्यार्यम् , अत एव धार्मिकमिति, सुवचनं श्रुत्वेति ।

**अत्र माहनशब्देन श्रावक एव व्याख्यातः । तथा च त्वं, कथयिष्यसि छद्मस्थः साधुः सूक्ष्मादिभेदभिन्नजीवहननाभिवृत्तो नास्ति एतदपि तव वाचाटत्वं न युक्तं, पञ्चमहाव्रतोच्चारे सर्वेषां पाठस्य तुल्यत्वात् तथा चेति वदन् छद्मस्थसाधोर्जीवदयायां विंशतिविशोपकान् कथं वदसि ?। तव मते केवलिन एव जीवदयायां विंशतिविशोपका न तु छद्मस्थसाधोः । तथा च त्वं वदिष्यसि छद्मस्थः साधुः सूक्ष्मादिभिन्नजीवहननाभिवृत्तोऽस्ति परं परिहर्तुं न शक्नोति,**

केवली तु परिहर्तुं शक्नोति, एतदपि न युक्तितुलामारोहति। हस्तपादाद्युपकरणसाम्यात् उत्पन्नकेवलत्वात्केवलिनो ज्ञानेनाधिक्यं परं हस्तपादाद्युपकरणे समानत्वं तेन केवल्यपि परिहर्तुं शक्नोत्येवेति न तेन महामाहन इति विशेषणं छद्मस्थसाधोरपि युक्तम्। यदि श्रावको माहनतया व्याख्यातस्तदा साधुर्महामाहनतया कथं नोच्यते तेन महामाहन इति जिनविशेषणमुपदिश्य मुग्धान् अभिवातवन्मा भ्रमे पातय स्वयं मा भ्रम चानन्तसंसार इति ॥

अन्यच्च—रायगिहे जाव एवं वयासि अणगारस्स णं भावियप्पणो पुरओ दुहओ जुगमायाए पेहाए रीयंरीयमाणस्स अहे कुक्कूडपोतए वा वट्टापोतए वा फुलिंगच्छाऐ वा परियावज्जेज्जा तस्स णं भंते! किं ईरियावहिया किरिया किज्जइ संपराइया किरिया कज्जइ ?, गोयमा! ईरियावहिया किज्जइ से केणट्ठेणं भंते! एवं वुचइ—जहा सत्तमसए संवुडद्देसए जाव अट्ठो निक्खित्तो सेवं भंते सेवं भंते जाव विहरति ॥

अस्य वृत्तिर्यथा—पुरओत्ति अग्रतः, दुहओत्ति द्विधान्तरान्तरा पार्श्वत पृष्ठतश्चेत्यर्थः। जुगमायाएत्ति यूपमात्रया दृष्ट्या, पेहाएत्ति प्रेक्ष्य २ रीयंति गतं—गमनं, रीयमाणस्स कुर्वत इत्यर्थ.। कुक्कुडपोयएत्ति कुर्कुटडिंभः, वट्टापोयएत्ति इह वर्तकः पक्षिविशेषः, फुलिंगच्छाएत्ति पिपीलिकासदृशः, परियावज्जेज्जत्ति पर्यापद्येत–म्रियेत, एवं जहा सत्तमसए इत्यादि ॥ इति अष्टादशमशतकस्याष्टमोद्देशके।

अत्र यदुक्तं—

जहा सत्तमसए संवुडद्देसए तदपि तव कुमतनिरासाय सूत्रं लिख्यते— संवुडस्स णं भंते! अणगारस्स आउत्तं गच्छ-

माणस्स जाव आउत्तं तुयट्टमाणस्स आउत्तं वत्थं पडिग्गहं कंबलं पायपुंछणं गेण्हमाणस्स वा निक्खिवमाणस्स वा तस्स णं भंते! किं ईरियावहिया किरिया कज्जइ? संपराइया किरिया कज्जइ?, गोयमा! संवुडस्स णं अणगारस्स जाव तस्स णं ईरियावहिया किरिया कज्जइ, णो संपराइया किरिया कज्जइत्ति। से केणट्ठेणं भंते! एवं वुच्चइ–संवुडस्स णं जाव संपराइया किरिया कज्जइ?, गोयमा! जस्स णं कोहमाणमायालोभा वोच्छिण्णा भवंति तस्स णं ईरियावहिया किरिया कज्जइ, तहेव जाव उस्सुत्तं रीयमाणस्स संपराइया किरिया कज्जइ, से णं अहासुत्तमेव रीयइ, से तेणट्ठेणं गोयमा! जाव नो संपराईया किरिया कज्जइ ॥

इति सप्तमशतके सप्तमोदेशकं सूत्रं ॥ २८८ ॥

न च वाच्यं अणगारस्स णं भंते! भावियप्पणो पुरओ दुहओ जुगमायाए पेहाए रीयंरीयमाणस्सेति विशेषणं केवलिनो न घटते किंतु एकादशम–द्वादशम–गुणस्थानवर्तिनश्छद्मस्थसाधोर्विशेषणमिति। यतः सत्यपि केवलज्ञाने केवलिन ईर्याप्रवृत्तसोपयोगछद्मस्थसाधोरिव विशेषतो गमनं भवति तस्य यथा तथा गमने लोकापभ्राजनापत्तेः अहो जैनः केवली यातीत्युपहासकरणं भवति च तथा च जनानां बोधिनाशकारणं भवति तस्य केवलज्ञानमजानंश्च कश्चित् साधुनिन्दापरो भवतीति बहवो दोषाः। तथा च संवुडस्स णं भंते! अणगारस्सेति सामान्यसूत्रकथनेन जस्स णं कोहमाणमायालोभा वोच्छिन्ना इति कथनेन चैकादशम-द्वादशम–त्रयोदशमगुणस्थानवर्तिनः साधवो गृहीताः। यदि एतत्सूत्रकर्तुः श्रीसुधर्मगणभृतोऽयमभिप्रायो न स्यात्तदा छउमत्थस्स णं भंते! अणगारस्स भावियप्पणो इति केवलिव्यावर्तकं विशेषणं कुर्यात्, इति च विशेषणं न कृतं, तदावसीयते ११–१२–१३ गुणस्थानवर्तिनः साधवो गृहीता इति भगवतीसूत्रं तद्वृत्तिं च विलोक्य सम्यग् ज्ञानदृशा विचारय, मुंच च स्वमतहठम्। प्रतिपद्यस्व च संप्रति

विजयमानयुगप्रधानसमाननैकराजसभालब्धबहुमानश्रीविजयदेवसूरीश्वराणामाज्ञां शिरःशेषामिवेति ॥

अन्यच्च—केवली णं भंते ! अस्सिं समयंसि जेसु आगासपदेसेसु हत्थं वा पायं वा बाहुं वा उरुं वा ओगाहित्ताणं चिट्ठति पभू णं भंते ! केवली सेयकालंसिवि तेसु चेव आगासपदेसेसु हत्थं वा जाव ओगाहित्ता णं चिट्ठित्तए ?, गोयमा ! णो तिणट्ठे समट्ठे, से केणट्ठेणं भंते ! जाव केवली णं अस्सिं समयंसि जेसु आगासपदेसेसु हत्थं वा जाव चिट्ठति णो णं पभू केवली सेयकालंसिवि तेसु चेव आगासपएसेसु हत्थं वा जाव चिट्ठित्तए ?, गोयमा ! केवलिस्स णं वीरियसजोगसद्दव्वयाए चलाइं उवकरणाइं भवति, चलोवगरणट्ठयाए य णं केवली अस्सिं समयंसि जेसु आगासपदेसेसु हत्थं वा जाव चिट्ठति णो णं पभू केवली सेयकालंसि वि तेसु चेव जाव चिट्ठित्तए, से तेणट्ठेणं जाव वुच्चइ–केवली णं अस्सिं समयंसि जाव चिट्ठित्तए ॥

सूत्र १९८, भगवतीसूत्रपञ्चमशतके चतुर्थोद्देशके ॥

अथैतस्य वृत्तिर्यथा—**अस्सिं समयंसित्ति**, अस्मिन् वर्त्तमाने समये, **ओगाहित्ताणंति** अवगाह्याक्रम्य, **सेयकालंसिवित्ति**, एष्यत्कालेऽपि **वीरियसजोगसद्दव्वयायत्ति** वीर्यं–वीर्यान्तरायक्षयप्रभवा शक्तिः तत्प्रधानं सयोगं–मानसादिव्यापारयुक्तं यत् सद्–विद्यमानं द्रव्यं जीवद्रव्यं तत्तथा; वीर्यसद्भावेऽपि जीवद्रव्यस्य योगान् विना चलनं न स्यादिति सयोगशब्देन सद्द्रव्यं विशेषितं, सदिति विशेषणं च तस्य सदा सत्तावधारणार्थं, अथवा स्वं–आत्मा तद्रूपं द्रव्यं स्वद्रव्यं ततः कर्मधारयः, अथवा वीर्यप्रधानः सयोगो–योगवान् वीर्यसयोगः स

चासौ सद्द्रव्यश्च मनःप्रभृतिवर्गणायुक्तो वीर्यसयोगसद्द्रव्यस्तस्य भावस्तत्ता तया हेतुभूतया, **चलाइंति** अस्थिराणि, **उवगरणाइंति** अंगानि, **चलोवगरणट्ठयाएत्ति** चलोपकरणलक्षणो योऽर्थस्तद्भावश्चलोपकरणार्थता तया, चशब्दः पुनरर्थः ॥

अत्र केवलिनः सत्यपि केवलज्ञाने चलोपकरणत्वं दर्शितं चलोपकरणत्वादेव कदाचित् सूक्ष्मादिजीववधसंभवो दुर्निवार्य इति । अत्र च निरंशः कालः समय इति लक्षणः समयो न गृह्यते यतः सा क्रिया नास्ति यस्यां क्रियमाणायां असंख्याताः समया न भवन्ति । नात्र समयशब्देनावसरो वेला इति व्याख्येयं यथा कश्चित् शिष्यो गुरुं विज्ञपयति समयो भवति तदाहं पठितुमागच्छामीत्यादि सर्वजनप्रतीतं अस्मिन्नेव सूत्रे **सेयकालंसित्ति** कथनेनायमेवार्थः सूचितः । अत्रापि सम्यग् विचारय स्वमतग्रस्तो भूत्वा अन्यथार्थं मा कुरु । यतः—

**पयमक्खरं पि इक्कं जो न रोएइ सुत्तनिद्दिट्ठं । सेसं रोयंतो वि हु मिच्छादिट्ठी जमालि व्व ॥ १ ॥** इति वचोजानानस्त्वं हठग्रस्तः किं भवसीति ॥

अन्यच्च—'अवश्यंभावी भावः सर्वत्रापि केवलिनोऽपि दुस्त्याज्यो दृश्यते'। यदाहुः—श्रीअभयदेवसूरयो भगवत्यां नवमशतके जमाल्यधिकारवृत्तौ ।

अथ श्रीमहावीरेण सर्वज्ञत्वादमुं व्यतिकरं जानतापि किमिति प्रव्राजितोऽसाविति उच्यते—अवश्यं भाविभावानां महानुभावैरपि प्रायो लंघितुमशक्यत्वादिति ॥

तथाष्टमहाप्रातिहार्यशालिनि चतुस्त्रिंशदतिशयश्रीविराजमाने श्रीवीरे सति कुशिष्येण सुनक्षत्रसर्वानुभूती साधू तेजोलेश्यया भस्मसात्कृतौ । एवं द्वारकादाहादयोऽपि भावाः सुरेन्द्रैर्जिनेन्द्रैरपि दुरपासनीयास्तत्रावश्यंभावी जीववधो दुरपासनीयः, स च जीववध ईर्यापथिकीक्रियाया एव कारणं न तु आरंभिकीक्रियाया', यत ऊचुः श्रीभगवत्यां प्रथमशतके प्रथमोद्देशकवृत्तौ श्रीअभयदेवसूरयः—

यद्यप्यसंयतानां सूक्ष्मैकेन्द्रियादीनां नात्मारंभकादित्वं साक्षादस्ति तथाऽप्यविरतिं प्रतीत्य तदस्ति तेषां, न हि ते ततो निवृत्ताः, अतोऽसंयतानामविरतिस्तत्र कारणमिति, निवृत्तानां तु कथंचिदात्माद्यारंभकत्वेऽप्यनारंभकत्वं, ”

यदाह—

जा जयमाणस्स भवे विराहणा सुत्तविहिसमग्गस्स सा होइ निज्जरफला अज्झत्थविसोहिजुत्तस्स ॥१॥ त्ति । न च वाच्यं चलोपकरणतयावश्यंभावि सूक्ष्मादिजीववधवत् मृषावादित्वादत्तभोगित्वाद्यप्यस्त्विति तत्र चलोपकरणत्वं कारणं नास्ति यथा चलोपकरणतया अणगारस्स णं भावियप्पणो पुरओ दुहओ जुगमायाए पेहाए रीयंरीयमाणस्स अहे कुक्कुडपोत एवेति सूत्रं श्रीभगवतीसूत्रे दर्शितं तथा चलोपकरणतया मृषावादित्वादत्तभोगित्वादिविषयकं सूत्रं दर्शितमभविष्यत्तच्च न दृश्यते तेन चलोपकरणत्वं तत्र कारणं न भवतीति तेन मुंच प्रतिकूलतया जलपाकत्वं अंगीकुरु स्वगच्छाधिराजश्रीविजयदेवसूरीणां वच इति । यतः—

जह आणवेइ राया पगईओ तं सिरेण इच्छंति इय गुरुजणमुहभणियं कयंजलिउडेहिं सोयव्वंति सूत्रं प्रतिदिनं

पश्यन्नपि स्वगच्छाधिराजानां वच' कथं लुंपसीति । अन्यच्च असद्वेद्याश्रवाधिकारे श्रीप्रवचनसारोद्धारवृत्तौ ६६ चरणद्वारे–

" आश्रवाणा निरोधो यः, संवरः स प्रकीर्तितः ।
सर्वतो देशतश्चेति, द्विधा स तु विभिद्यते ॥ १ ॥
अयोगिकेवलिष्वेव, सर्वतः संवरो मतः ।
देशतः पुनरेकद्वि———प्रभृत्याश्रवरोधिषु ॥ २ ॥"

अत्र 'अयोगिकेवलिष्वेव सर्वतः संवरो मतः' इति कथनेन सयोगिषु केवलिषु सर्वतः संवरो नागत एवेत्यक्षराणि त्वया दृष्टान्येव न तन्मन्ये त्वं स्वमतहठी वर्तसे तेन स्वमतानुकूलाभासान्यक्षराणि पश्यसि परं तत्त्वमार्गानुसारीण्यक्षराणि पश्यस्येव न । यथा लोभाभिभूतो वणिक् स्ववहिकापत्रेषु लभ्याक्षराणि पश्यति परं देयाक्षराणि पश्यत्येव नेति दृष्टान्तं त्वं करोषीति ॥

अन्यच्च—द्रव्यभावाभ्यां हिंसा चतुर्भङ्गीविचारे प्रतिक्रमणसूत्रवृत्तौ तत्र द्रव्यतो भावतश्च हिंसा हन्मीति परिणतस्य मृगादिवधे १, द्रव्यतो न तु भावतो हिंसा ईर्यासमितस्य साधोः सत्त्ववधे २, भावतो न तु द्रव्यतो हिंसांगारमर्दकस्य कीटबुद्ध्याङ्गारमर्दने ३, न द्रव्यतो न च भावतो हिंसा मनोवाक्कायैः शुद्धस्य साधोः ४ ॥

अत्र मनोवाक्कायैः शुद्धः साधुर्मेषोन्मेषौ कुर्वाणस्तथान्यसूक्ष्मांगसंचाले बादरवायुकायादिविराधनां कुर्वाणश्च चतुर्थभंगे निर्दिष्टस्तेनावधेहि यथा केवली नित्यं चतुर्थभंगे वर्तते । तथा मनोवाक्कायैः शुद्धः साधुरशक्यपरिहारजां हिंसां कुर्वन्नपि चतुर्थे भंगे एवापतति अशक्यपरिहारजा हिंसा १ तीर्थकृदाज्ञातक्रिया जाता च हिंसा २ हिंसा दोषाय न भवतीति ज्ञायते यथा व्याख्यानक्षणे हस्तकान्

कुर्वाणो गीतार्थ ईर्यापथिकीभाग् न भवति १ । यथा च प्रतिक्रमणं कुर्वाणः साधुरुद्घाटमुखेन वन्दनकयुगलं ददानो 'अहो कायं काय'मित्यालापकं बाढस्वरेण पठन्नपीर्यापथिकीभाग् न भवति चतुर्थं भंगं नाक्रामति च । तथा केवल्यपि कदाचिदशक्यपरिहारजां हिंसां कुर्वाणश्चतुर्थं भंगं नाक्रामति यदि अशक्यपरिहारजा हिंसा १ तीर्थकृदाज्ञातक्रियाजा च हिंसा २ हिंसात्वेन परिणमति तदाहर्निशं जानतोऽपि साधोस्तयोर्जायमानत्वात्पंचमहाव्रतोच्चार एव कथं स्यात्तेन ते उभे हिंसे हिंसात्वेन न गण्ये अविधिना प्रवर्तमानस्य ते अपि हिंसे हिंसात्वेन भवत एव । तत्र ' जा जयमाणस्स भवे ' इति गाथयोक्त एवेति । यदुक्तं—

**शरीरी म्रियतां मा वा, ध्रुवं हिंसा प्रमादिनः । सा प्राणव्यपरोपेऽपि, प्रमादरहितस्य न ॥ १ ॥**

**प्राणी प्रमादतः कुर्याद्यत्प्राणव्यपरोपणम् । सा हिंसा जगदे प्राज्ञै-र्बीजं संसारभूरुहः ॥ २ ॥**

**'प्रमत्तयोगात्प्राणव्यपरोपणं हिंसे'ति**

**—— तत्त्वार्थसूत्रम् ॥**

अन्यच्चातिक्रान्ताष्टवर्षीयः कश्चित्साधुः केवलज्ञानं प्राप्याष्टवर्षन्यूनां पूर्वकोटिं विहरति स किं नदीरुत्तरति न वा ? । तत्र कस्मिंश्चित्सूत्रे निषेधः प्रतिपादितो नास्ति तेन नदीरुत्तरतीत्यागतं, स किं मार्गेणाथवोन्मार्गेण ? उन्मार्गेण, उन्मार्गेणोत्तरणं न घटते किंतु मार्गेणैव । मार्गेणोत्तरतः सतः सर्वत्राचित्ताप्कायप्रदेशो भवत्येवेति नियमो नास्ति । क्वचिदचित्ताप्कायप्रदेशो भवति, बाहुल्येन तु सचित्ताप्कायप्रदेश एव भवति, तेन केवलिनो नद्युत्तरणविषयेऽपि त्वं किमुत्तरं दास्यसीति वद । तथैकस्मिन् मार्गे केवलिनां शतानि सहस्राणि वा समु-

दायेन विहरन्ति तदा सर्वत्राचित्ताकाशप्रदेशाः प्राप्यन्त एवेति निश्चयः क्व प्रोक्तोऽस्तीति वद ॥

**अन्यच्च—सत्तहिं ठाणेहिं छउमत्थं जाणेज्जा, तं०—पाणे अइवाइत्ता भवति १, मुसं वइत्ता भवति २, अदिन्नं आदित्ता भवति ३, सद्दफरिसरसरूवगंधे आसादइत्ता भवइ ४, पूयासक्कारमणुवूहेत्ता भवति ५, इमं सावज्जंति पण्णवेत्ता पडिसेवेत्ता भवति ६, नो जहावाई तहाकारि यावि भवइ ७। तथा सत्तहिं ठाणेहिं केवली जाणेज्जा, तं—नो पाणे अइवाइत्ता भवइ १, नो मुसं वइत्ता भवइ २, नो अदिन्नं आदइत्ता भवइ ३, नो सद्दफरिसरसरूवगंधे आसादइत्ता भवइ ४, नो पूयासक्कारमणुवूहेत्ता भवइ ५, नो इमं सावज्जंति पण्णवेत्ता पडिसेवित्ता भवइ ६, जहावाई तहाकारि यावि भवइ ७ ॥ इति**

श्रीस्थानांगसूत्रालापकौ दर्शयन् मा मुग्धान् स्वमताभिनिवेशं कारय, अनन्तसंसारचक्रभवभ्रमणतो भयं विचारय च। अरे मूढ ! अरे सिद्धान्तभावानभिज्ञ ! इदं सामान्यसूत्रं वर्तते न विशेषसूत्रम्। यदि सर्वोऽपि छद्मस्थः प्राणातिपातयिता भवति तदा प्रथमव्रतोच्चारोच्छेद एव जातस्तत्र मते यदि छद्मस्थः साधुर्ज्ञात्वाऽपि प्राणातिपातं कुर्यात्तदा प्रतिदिनं प्रातरुत्थाय प्रथमव्रतोच्चारस्य, क्रियमाणस्य वैफल्यमेव। तथा च मनोवाक्कायैः शुद्धः साधुश्चतुर्थभंगे निर्दिष्टस्तदपि कथं संजाघटीति। एवं च सति छद्मस्थसाधुपंचमहाव्रतोच्चारे च कुत्रापि भेदो भवत्येव। यदि कश्चन भेदोऽभविष्यत्तदा छद्मस्थः व्रतोच्चारे **पाणाइवायाओ वेरमणमित्य**करिष्यत्, केवली व्रतोच्चारे च **सव्वाओ पाणाइवायाओ वेरमणमित्य**करिष्यदिति कुत्रापि आगमे न कृतं तेनेदं सामान्यसूत्रं न विशेषसूत्रमिति अशक्यपरिहारजा हिंसा १, तीर्थंकृदाज्ञातक्रियाभ्यो जाता च हिंसा २, हिंसादोषो न भवति, तेन **नो इमं सावज्जं पण्णवेत्ता पडिसेवित्ता भवइ**। जहा

वाई तहा कारिया भवइ इति द्वे सूत्रे न व्याहते, यदि च तीर्थकृदाज्ञातक्रियाः कुर्वाणस्य हिंसादोषो भवति तदा तीर्थकृदेवंविधे कार्ये छद्मस्थं साधुं प्रवर्तयेदपि कथं प्रवर्तितश्च दृश्यते यथा—

जत्थ णं नई निच्चोयगा निच्चसंदणा नो से कप्पेइ सव्वओ समंता सक्कोसं जोअणं भिक्खायरियाए गंतुं पडिनियत्तए ॥ ११ ॥ एरावई कुणालाए जत्थ चक्किया सिया एगं पायं जले किच्चा एगं पायं थले किच्चा एवं चक्किया सिया एवण्हं कप्पइ सव्वओ समंता सक्कोसं जोअणं गंतुं पडिनियत्तए एवं नो चक्किया सिया एवं से नो कप्पइत्ति ।

तथा छद्मस्थः साधुः केवलिनं विहारविषये परिपृच्छति तदा याहीत्येवमादेशं दद्यान्न वा याहीत्येवमादेशं ददानो दृश्यते तदावश्यं भाविनं सूक्ष्मादिजीवव्यपरोपं ज्ञात्वापि कथमादिष्टश्छद्मस्थः साधुर्विहारविषये तथा केनचिदविरतेन देशविरतेन वा गमनविषये केवली पृष्टस्सन् मौनमालम्ब्य तिष्टति वा न वा । तत्र मौनमेवावलम्ब्य तिष्टतीति दृश्यते । तत्र कारणं त्वविरतत्त्वमेव साधुविहारादेशविषये कारणं सर्वविरतित्वमेव तेनावसीयते अशक्यपरिहारजा हिंसा तीर्थकृदाज्ञातक्रियाः कुर्वाणस्य साधोर्हिंसा हिंसादोषाय नेति । यदि सापि हिंसा दोषाय स्यात्तदा स्वायुषोऽन्त्यसमये यथाख्यातचारित्रवान् श्रीवीरः श्रीगौतमं प्रति देवशर्मणः प्रतिबोधायान्यस्मिन् ग्रामे गमनाय याहीत्यादेशं कथं दत्तवान् ? इत्यादयः शतशः श्रीजिनागमसंवादिन्यो युक्तयस्तव प्रतिबोधाय सन्ति, परमभिनिवेशमिथ्यात्वान्धकारगहनमग्नस्य ता युक्तयो भास्वद्भास्करकान्तय इव लोचनविकलस्य किं कुर्वन्तीति ॥

अन्यच्च तव हितायैवाहं प्रवृत्तस्सन् आगमवाक्यं प्रतिभूकृत्य वच्मि । तदपि शृणु—

पंचहिं ठाणेहिं छउमत्थे णं उदिण्णे परीसहोवसग्गे सम्मं सहेज्जा खमेज्जा तितिक्खेज्जा अहियासेज्जा, तं जहा—उदिण्णकम्मे खलु अयं पुरिसे उम्मत्तगभूते, तेण मे एस पुरिसे अक्कोसति वा अवहसति वा निच्छोढेति वा णिब्भंछेति वा बंधति वा रुंभति वा छविच्छेतं करेति वा पमारं वा णेति उद्दवेइ वा वत्थं वा पडिग्गहं वा कंबलं वा पायपुंछणं अछिंदति वा विच्छिंदति वा भिंदति वा अवहरति वा १, जक्खातिट्ठे खलु अयं पुरिसे, तेणं मे एस पुरिसे अक्कोसति वा तहेव जाव अवहरति वा २, ममं च णं तब्भववेयणिज्जे कम्मे उदिण्णे भवति, तेणं मे एस पुरिसे अक्कोसति वा जाव अवहरति वा ३, ममं च णं सम्मं असहमाणस्स अक्खममाणस्स अतितिक्खमाणस्स अणहियासमाणस्स किं मन्ने कज्जइ ?, एगंतसो मे पावे कम्मे कज्जति ४, ममं च णं सम्मं सहमाणस्स जाव अहियासेमाणस्स किं मन्ने कज्जति ?, एगंतसो मे निज्जरा कज्जइ ५, इच्चेतेहिं पंचहिं ठाणेहिं छउमत्थे उइण्णे परीसहोवसग्गे सम्मं सहेज्जा जाव अहियासेज्जा। पंचहिं ठाणेहि केवली उदिन्ने परिसहोवसग्गे सम्मं सहेज्जा जाव अहियासेज्जा, तं जहा—खेत्तचित्ते खलु अयं पुरिसे तेण ममं एस पुरिसे अक्कोसति वा तहेव जाव अवहरति वा १, दित्तचित्ते खलु अयं पुरिसे तेण मे एस पुरिसे अक्कोसति वा तहेव अवहरति वा २, जक्खातिट्ठे खलु अयं पुरिसे तेण मे एस पुरिसे जाव अवहरति वा ३, ममं च णं तब्भववेयणिज्जे कम्मे उदिण्णे भवति तेण मे एस पुरिसे जाव अवहरति वा ४, ममं च णं सम्मं सहमाणं खममाणं तितिक्खमाणं अहियासेमाणं पासित्ता बहवे अण्णे छउमत्था समणा निग्गंथा उइण्णे २ परीसहोवसग्गे एवं सम्मं सहिस्संति जाव अहियासिस्संति ५, इच्चेतेहिं पंचहिं ठाणेहिं केवली उदिण्णे परीसहोवसग्गे

सम्मं सहेज्जा जाव अहियासेज्जा

इति श्रीस्थानांगसूत्रे पंचमाध्ययने ( सूत्र ४०९ ) ॥

अत्र केवलिन उन्मत्तादिपुरिषेणेतस्तत आकर्षणादि क्रियमाणे यथा तथा पदन्यासे जीवविराधनासंभवो युक्तिमान्न वेति स्वचेतसि स्वत एव विचारय । तथा केवली साधुर्भूताद्याविष्टहस्ते आयातीति विषये अवश्यं भावि भावा जिनैरपि परिहर्तुमशक्या इत्युत्तरमन्तरेण किमुत्तरं दास्यतीति वद । अत्रार्थे अन्यदुत्तरं नास्तीति अत एव त्वमेव प्रथमरात्रौ मार्गभ्रष्टोऽसि नाहमिति ॥

अन्यच्च---अत्थि णं भंते ! समणाणं निग्गंथाणं किरिया कज्जइ?, हंता ! अत्थि । कहं णं भंते ! समणाणं निग्गंथाणं किरिया कज्जइ ?, मंडियपुत्ता ! पमादपच्चया १, जोगनिमित्तं २, एवं खलु समणाणं निग्गंथाणं किरिया कज्जइ ।

भगवतीसूत्रे तृतीयशतके तृतीयोद्देशे सूत्रं १५१)

अत्थिणमित्यादि, अस्त्ययं पक्षो यदुत क्रिया क्रियते--क्रिया भवति, प्रमादप्रत्ययात् यथा दुःप्रयुक्तकायक्रियाजन्यं कर्म, योगनिमित्तं च यथैर्यापथिकं कर्म ॥

जीवे णं भंते ! सता समियं एयति वेयति चलति फंदति घट्टति खुब्भति उदीरति तं तं भावं परिणमति ?, हंता ! मंडियपुत्ता ! जीवे णं सता समियं एयति जाव तं तं भावं परिणमति । जावं च णं भंते ! से जीवे सता समितं

जाव परिणमति तावं च णं तस्स जीवस्स अंते अंतकिरिया भवति ?, णो इणट्ठे समट्ठे, से केणट्ठेणं भंते ! एवं वुच्चति-जावं च णं से जीवे सता समितं जाव अंते अंतकिरिया ण भवति ?, मंडियपुत्ता ! जावं च णं से जीवे सता समितं जाव परिणमति तावं च णं से जीवे आरंभति संरंभति समारंभति आरंभे वट्टति संरंभे वट्टति समारंभे वट्टति आरंभमाणे सारंभमाणे समारंभमाणे आरंभे वट्टमाणे संरंभे वट्टमाणे समारंभे वट्टमाणे बहूणं पाणाणं भूताणं जीवाणं सत्ताणं दुक्खावणयाए सोयावणयाए जूरावणयाऐ तिप्पावणयाए पिट्टावणयाए परियावणयाए वट्टति, से तेणट्ठेणं मंडियपुत्ता ! एवं वुच्चति-जावं च णं से जीवे सता समितं एयति जाव परिणमति तावं च णं तस्स जीवस्स अंते अंतकिरिया न भवइ ॥ जीवे णं भंते ! सया समियं णो एयइ जाव णो तं तं भावं परिणमइ ?, हंता मंडियपुत्ता ! जीवे णं सया समियं जाव नो परिणमति। जाव च णं भंते ! से जीवे नो एयति जाव नो तं तं भावं परिणमति तावं च णं तस्स जीवस्स अंते अंतकिरिया भवति ?, हंता ! जाव भवति। से केणट्ठेणं भंते ! जाव भवति ?, मंडियपुत्ता ! जावं च णं से जीवे सता समितं णो एयति जाव णो परिणमति तावं च णं से जीवे णो आरंभति णो संरंभति णो समारंभइ नो आरंभे वट्टति णो संरंभे वट्टति णो समारंभे वट्टति अणारंभमाणे असंरंभमाणे असमारंभमाणे आरंभे अवट्टमाणे संरंभे अवट्टमाणे समारंभे अवट्टमाणे बहूणं पाणाणं भूयाणं जीवाणं सत्ताणं अदुक्खावणयाए जाव अपरियावणयाए वट्टति। से जहानामए केइ पुरिसे सुक्कं तणहत्थयं जायतेयंसि पक्खिवेज्जा, से णूणं मंडियपुत्ता ! से सुक्के तणहत्थए जायतेयंसि पक्खित्ते समाणे खिप्पामेव मसमसाविज्जइ ?, हंता ! मसमसाविज्जइ, से जहा णामए-केइ पुरिसे तत्तंसि अयकवल्लंसि उदयबिंदू पक्खिवेज्जा,

से णूणं मंडियपुत्ता! से उदबिंदू तत्तंसि अयकवल्लंसि पक्खित्ते समाणे खिप्पामेव विद्धंसमागच्छति?, हंता! विद्धंसमागच्छति, से जहाणामए हरए सिया पुण्णे पुण्णप्पमाणे वोलट्टमाणे वोसट्टमाणे समभरघडत्ताए चिट्ठति?, हंता चिट्ठति, अहे णं केइ पुरिसे तंसि हरयंसि एगं महं णावं सतासवं सतच्छिद्दं ओगाहेज्जा, से णूणं मंडियपुत्ता! सा णावा तेहिं आसवदारेहिं आपूरेमाणी २ पुण्णा पुण्णप्पमाणा वोलट्टमाणा वोसट्टमाणा समभरघडत्ताए चिट्ठति?, हंता! चिट्ठति, अहे णं केइ पुरिसे तीसे नावाए सव्वओ समंता आसवदाराइं पिहेति पिहित्ता नावाउस्सिंचणएणं उदयं उस्सिंचिज्जा, से णूणं मंडियपुत्ता! सा नावा तंसि उदयंसि उस्सिंचिज्जंसि समाणंसि खिप्पामेव उड्ढं उदाति?, हंता! उदाइज्जा, एवामेव मंडियपुत्ता! अत्तत्तासंवुडस्स अणगारस्स इरियासमियस्स जाव गुत्तबंभयारियस्स आउत्तं गच्छमाणस्स चिट्ठमाणस्स निसीयमाणस्स तुयट्टमाणस्स आउत्तं वत्थपडिग्गहकंबलपायपुंछणं गेण्हमाणस्स णिक्खिवमाणस्स जाव चक्खुपम्हनिवायमवि वेमाया सुहुमा ईरियावहिया किरिया कज्जइ, सा पढमसमयबद्धपुट्ठा बीयसमयवेइया ततियसमयनिज्जरिया सा बद्धा पुट्ठा उदीरिया वेदिया णिज्जिण्णा सेयकाले अकम्मं वा वि भवति, से तेणट्ठेणं मंडियपुत्ता! एवं वुच्चति-जावं च णं से जीवे सता समितं णो एयति जाव अंते अंतकिरिया भवति ॥

श्रीभगवत्यां तृयशतके तृतीयोद्देशके सूत्राणि १५२)

अस्य किंचिद् व्याख्या श्रीभगवतीवृत्तिगता लिख्यते—

जीवेणमित्यादि, इह जीवग्रहणेऽपि सयोग एवासौ ग्राह्यः, अयोगस्यैजनादेरसंभवात्, सदा नित्यं समियंति सप्रमाणं एयइत्ति

एजते—कम्पते एजृङ् कम्पने इति वचनात् **वेयइत्ति** व्येजते विविधं कम्पते **चलइत्ति** स्थानान्तरं गच्छति । **फंदइत्ति** स्पन्दते, किंचिच्चलति स्पदि किञ्चिच्चलने इतिवचनात्, अन्यमवकाशं गत्वा पुनस्तत्रैवागच्छतीत्यन्ये, **घट्टइत्ति** सर्वदिक्षु चलति, पदार्थान्तरं वा स्पृशति, **खुब्भइत्ति** क्षुभ्यति पृथिवीं प्रविशति, क्षोभयति वा, पृथिवीं, बिभेति वा, **उदीरइत्ति** प्राबल्येन प्रेरयति, पदार्थान्तरं प्रतिपादयति वा, शेषक्रियाभेदसंग्रहार्थमाह—**तं तं भावं परिणमतित्ति** उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणादिकं परिणामं यातीत्यर्थः, एषां चैजनादिभावानां क्रमभावित्वेन सामान्यतः सदेति मन्तव्यं, न तु प्रत्येकापेक्षया, क्रमभाविनां युगपदभावादिति, **तस्स जीवस्स अंतित्ति** मरणान्ते, **अन्तकिरियत्ति** सकलकर्मक्षयरूपा, **आरंभइत्ति** आरभते पृथिव्यादीनुपद्रवयति, **सारंभइत्ति** संरभते तेषु विनाश—संकल्पं करोति **समारंभइत्ति** समारभते तानेव परितापयति, आह च—“ **संकप्पो संरंभो परितावकरो भवे समारंभो । आरंभो उद्दवओ सव्वनयाणं विसुद्धाण ॥ १ ॥** ” इदं च क्रिया क्रियावतोः कथंचिदभेद इत्यभिधानाय तयोः समानधिकरणतः सूत्रमुक्तम्, अथ तयोः कथंचिद्भेदोऽप्यस्तीति दर्शयितुम्—पूर्वोक्तमेवार्थं व्यधिकरणत आह—**आरंभेइत्यादि**, आरंभे अधिकरणभूते वर्तते जीवः, एवं संरंभे समारम्भे च, अनन्तरोक्तवाक्यार्थद्वयानुवादेनप्रकृतयोजनामाह—**आरंभमाणः संरभमाणः समारभमाणो जीव** इत्यनेन प्रथमो वाक्यार्थोऽनूदितः, आरंभे वर्तमान इत्यादिना तु द्वितीयः, **दुक्खावणयाए** इत्यादौ ताशब्दस्य प्राकृतप्रभवत्वात् दुःखापनायां मरणलक्षणदुःखप्रापणायाम्, अथवा इष्टवियोगादिदुःख—हेतुप्रापणायां, वर्त्तत इति योगः, तथा **शोकापनायां** दैन्यप्रापणायां **जूरावणताएत्ति** शोकातिरेकाच्छरीरजीर्णताप्रापणायां **तिप्पावणयाएत्ति** तेपापनायां ‘ तिपृ ष्टेपृ क्षरणार्थौ ’ इति वचनात् शोकातिरेकादेवाश्रुलालादिक्षरणप्रापणायां **पिट्टावणताएत्ति** पिट्टनप्रापणायां ततश्च परितापनायां शरीरसन्तापे वर्तते, क्वचित् पठ्यते **दुक्खावणयाए** इत्यादि, तच्च व्यक्तमेव, यच्च तत्र **किलामणयाए उद्दावणयाए** इत्यधिकमभिधीयते तत्र **किलामणयाएत्ति** ग्लानिनयने **उद्दावणयाएत्ति**

उत्त्रासने ॥ उक्तार्थविपर्ययमाह-**जीवेणमित्यादि णो पयइत्ति** शैलेशीकरणे योगनिरोधान्नो एजत इति, एजनादिरहितस्तु नारंभादिषु वर्तते, तथा च न प्राणादीनां दुःखापनादिषु, तथापि च योगनिरोधामिधानशुक्लध्यानेन सकलकर्मध्वंसरूपान्तक्रिया भवति, तत्र दृष्टान्तद्वयमाह–**से जहेत्यादि तिणहत्थयंति** तृणपूलकं **जायतेयंसित्ति** वह्नौ **मसमसाविज्जइत्ति** शीघ्रं दह्यते, इह च दृष्टान्तद्वयस्याप्युपनयार्थः सामर्थ्य-गम्यो, यथा–एवमेजनादिरहितस्य शुक्लध्यानचतुर्थभेदानलेन कर्मदाहदहनं स्यादिति ।

अथ निष्क्रियस्यैवान्तक्रिया भवतीति नौदृष्टान्तेनाह-**से जहाणामए इत्यादि,** इह शब्दार्थः प्राग्वन्नवरं **उद्दाइत्ति** उद्याति, जलस्योपरि वर्तते, **अत्ततासंवुडस्सत्ति** आत्मन्यात्मना संवृतस्य, प्रतिसंलीनस्येत्यर्थः, एतदेव **इरियासमितस्सेत्यादिना** प्रपंचयति–**आउत्तंति** आयुक्तमुपयोगपूर्वकमित्यर्थः, जाव **चक्खूपम्हनिवायमवित्ति** किं बहुना आयुक्तगमनादिना स्थूलक्रियाजालेनोक्तेन ? यावच्चक्षुःपक्ष्मनिपातोऽपि, प्राकृतत्वाल्लिंगव्यत्ययः, उन्मेषनिमेषमात्रक्रियाप्यस्ति, आस्तां गमनादिका, तावदिति शेषः, **वेमायत्ति** विविधमात्रा, अन्तर्मुहूर्त्तादेर्देशोनपूर्वकोटीपर्यन्तस्य क्रियाकालस्य विचित्रत्वात्, वृद्धाः पुनरेवमाहुः–यावच्चक्षुषो मेषोन्मेषमात्राऽपि क्रियाक्रियते तावताऽपि कालेन विमात्रया स्तोकमात्रयाऽपीति, क्वचिद्विमात्रेत्यस्य स्थाने **सपेहापत्ति** दृश्यते तत्र च स्वप्रेक्षया स्वेच्छया चक्षुःपक्ष्मनिपातो, न तु परकृतः, **सुहुमत्ति** सूक्ष्मबन्धादिकाला, **ईरियावहियत्ति** ईर्यापथो–गमनमार्गस्तत्र भवा ऐर्यापथिकी, केवलयोगप्रत्ययेति भावः, **किरियेत्ति** कर्म सातवेदनीयमित्यर्थः, **कज्जइत्ति** क्रियते भवतीत्यर्थः, उपशान्तमोहक्षीणमोहसयोगिकेवलिलक्षणगुणस्थानकत्रयवर्त्ती वीतरागोऽपि हि सक्रियत्वात् सातवेद्यं कर्म बध्नातीति भावः । **सेति** ईर्यापथिकी क्रिया **पढमसमयबद्धपुट्ठत्ति** बद्धा कर्मतापादनात्, स्पृष्टा जीवप्रदेशैः स्पर्शनात्, ततः कर्मधारये तत्पुरुषे च सति प्रथमसमयबद्धस्पृष्टा, तथा द्वितीयसमये वेदिता—अनुभूतस्वरूपा, एवं तृतीयसमये **निर्जीर्णा** अनुभूतस्वरूपत्वेन जीवप्रदेशेभ्यः परिशाटितेति, एतदेव वाक्या-

न्तरेणाह—सा बद्धा स्पृष्टा प्रथमे समये, द्वितीये तु उदीरिता उदयमुपनीता, किमुक्तं भवति ? —वेदिता, न ह्येकस्मिन् समये बन्ध उदयश्च संभवतीत्येवं व्याख्यातं, तृतीये तु निर्जीर्णा, ततश्च सेयकालेत्ति एष्यत्काले अकम्मं वाविस्ति अकर्माऽपि च भवति, इह च यद्यपि तृतीयेऽपि समये कर्म—अकर्म भवति तथापि तत्क्षण एवातीतभावकर्मत्वेन द्रव्यकर्मत्वात्—तृतीये समये निर्जीर्णं कर्मेति व्यपदिश्यते। चतुर्थादिसमयेषु त्वकर्मेति, अत्तत्तासंवुडस्से त्यादिना चेदमुक्तं—यदि संयतोऽपि साश्रवः कर्म बध्नाति तदा सुतरामसंयतः, अनेन च जीवनावः कर्मजलपूर्यमाणतयाऽर्थतो अधो निमज्जनमुक्तं, सक्रियस्य कर्मबन्धगणनाच्चाक्रियस्य तद्विपरीतत्वात् कर्मबन्धभाव उक्तः, तथा च जीवनावोऽनाश्रवतायामूर्ध्वगमनं सामर्थ्यादुपनीतमवसेयमिति ॥

—भगवत्यां तृतीयशतके तृतीयोद्देशके सूत्रं १५२॥

अत्रापि केवलिन ईर्यापथो गमनमार्गस्तत्र भवेर्यापथिकी क्रियोक्ता तेन सवृत्तिकस्यालापकस्य भावार्थं तत्त्ववृत्त्या विचार्याशी— कुरुष्व स्वगच्छाधीशाज्ञां मा भव जमालिवद्गोष्ठामाहिलवत्कदाग्रही मा पत च तद्वत्संसारपारावारगहने ॥

जीवाणं भंते ! किं आयारंभा १ परारंभा २ तदुभयारंभा ३ अणारंभा ४ गोयमा ! अत्थेगइया जीवा आया- रंभावि परारंभावि तदुभयारंभावि णो अणारंभा अत्थेगइया जीवा णो आयारंभा णो परारंभा णो तदुभयारंभा अणारंभा से केणट्ठेणं भंते ! एवं वुच्चइ—अत्थेइगया जीवा आयारंभावि ? एवं पडिउच्चारेयव्वं। गोयमा ! जीवा दुविहा पण्णत्ता, तं जहा—संसारसमावण्णगा य असंसारसमावण्णगा य। तत्थ णं जे ते असंसारसमावण्णगा ते णं सिद्धा, सिद्धा णं णो

आयारंभा परारंभा तदुभयारंभा जाव अणारंभा। तत्थ णं जे ते संसारसमावण्णगा ते दुविहा पण्णत्ता, तं जहा--संजया य असंजया य। तत्थ णं जे ते संजता ते दुविहा पण्णत्ता, तं जहा---पमत्तसंजता य अप्पमत्तसंजता य। तत्थ णं जे ते अप्पमत्तसंजता ते णं णो आयारंभा णो परारंभा जाव अणारंभा। तत्थ णं जे ते पमत्तसंजता ते सुहं जोगं पडुच्च णो आयारंभा नो परारंभा जाव अणारंभा। असुभं जोगं पडुच्च आयारंभावि जाव णो अणारंभा। तत्थ णं जे ते असंजता ते अविरतिं पडुच्च आयारंभावि जाव णो अणारंभा, से तेणट्ठेणं गोयमा ! एवं वुच्चति--अत्थेगतिया जीवा जाव अणारंभा ॥

इति भगवत्यां प्रथमशतके प्रथमोद्देशके सूत्रं १६ ॥

अत्र सिद्धानामनारंभकत्वं निरुपचारतः परं सर्वेषामप्रमत्तानामनारंभकत्वं कथं स्यादतोऽस्य सूत्रस्य वृत्तिर्लिख्यते--से केणट्ठेणंति अथ केन कारणेनेत्यर्थः, दुविहा पण्णत्तेत्ति मयाऽन्यैश्च केवलिभिः, अनेन समस्तसर्वविदां मतभेदमाह, मतभेदे तु विरोधिवचनतया तेषामसत्यवचनतापत्तिः, पाटलीपुत्रस्वरूपाभिधायकविरुद्धवचनपुरुषकदम्बकवदिति, प्रमत्तसंयतस्य हि शुभोऽशुभश्च योगः स्यात् संयतत्वात् प्रमादपरत्वाच्च इत्यत आह---सुभं जोगं पडुच्चत्ति शुभयोगः--उपयुक्ततया प्रत्युपेक्षणादिकरणम्, अशुभयोगस्तु तदेवानुपयुक्ततया, आह च---पुढवी आउक्काए तेऊवाऊवणस्सइतसाणं। पडिलेहणा पमत्तो छण्हंपि विराहओ होइ ॥ १ ॥ तथा--सव्वो-पमत्तजोगो समणस्स उ होइ आरंभोत्ति ततः शुभाशुभौ योगावात्मारंभादिकारणमिति। अविरइं पडुच्चत्ति इहायं भावः--यद्यप्यसंयतानां सूक्ष्मैकेन्द्रियादीनां नात्मारंभकादित्वं साक्षादस्ति तथाऽप्यविरतिं प्रतीत्य तदस्ति तेषां, न हि ते ततोऽनिवृत्ताः, अतोऽसंयतानामविरतिस्तत्र

कारणमिति, निवृत्तानां तु कथंचिदात्माद्यारंभकत्वेऽप्यनारंभकत्वं, यदाह—**जा जयमाणस्स भवे विराहणा सुत्तविहिसमग्गस्स । सा होइ निज्जरफला अज्झत्थविसोहिजुत्तस्स ॥१॥ त्ति से तेणट्ठेणंति** अथ तेन कारणेनेत्यर्थः। इदं पूर्वोक्तमपि सूत्रं व्याख्यानावसरप्राप्तत्वात्पुनरपि लिखितं विस्तरवाक्यमुपकारीति न पुनरुक्तदूषणमिति । ततोऽत्राप्रमत्तानां सप्तमाष्टमनवमदशमैकादशमद्वादशमत्रयोदशमगुणस्थानवर्तिनां संयतानामनया रीत्यानारंभकत्वमवसेयं तेनास्यापि सूत्रस्य भावं विचार्य प्रतिबुध्यस्व ॥

**अन्यच्च—एगया गुणसमियस्स रीयतो कायसंफासमणुचिन्ना एगतिया पाणा उद्दायंति ।**

अस्यार्थः—एकदा कदाचिद्गुणसमितस्स गुणयुक्तस्याप्रमत्तयतेः रीयमाणस्स सम्यगनुष्ठानवतोऽतिक्रामतः संकुचतः प्रसारयतो विनिवर्तमानस्य संपरिमृजतः कस्यांचिदवस्थायां कायः शरीरं तत्संस्पर्शमनुचीर्णाः कायसंगमागताः संपातिमादयः प्राणिन एके परितापमाप्नुवन्त्येके म्लानतामुपयान्त्येकेऽवयवध्वंसमापद्यन्ते । तथाहि—शैलेश्यवस्थां अपश्चिमावस्थां तु सूत्रेणैव दर्शयत्येके प्राणाः प्राणिनोपशीर्यंति प्राणैर्विमुच्यन्ते अत्र च कर्मबन्धं प्रति विचित्रता तथाहि—शैलेश्यवस्थायां मशकादीनां कायसंस्पर्शेन प्राणत्यागेऽपि पंचविधोपादानकारणयोगाभावान्नास्ति बन्धः उपशान्तमोहक्षीणमोहसयोगिकेवलिनां स्थितिनिमित्तकषायाभावात् सामयिको बन्धः। सप्तमाष्टमनवमदशमगुणस्थानवर्तिनोऽप्रमत्तयतेर्जघन्यतोऽन्तर्मुहूर्तमुत्कृष्टतोऽन्तःकोटाकोटीसागरस्थितिरिति । **श्रीआचारांगवृत्तौ** ॥

**उप्पाडियम्मि पाए इरियासमियस्स संकमट्ठाए वा पज्जेज्ज कुलिंगी मरेज्ज तज्जोगमासज्ज ॥१॥**
**न य तस्स तन्निमित्तो बंधो सुहुमो वि देसिओ समए अणवज्जे हुपयोगेण सव्वभावेण सो जम्मो ॥२॥ इति**

ओघनिर्युक्तिसूत्रे इत्यादि बहुष्वागमेषु दृश्यमानत्वात्तत्र को भवान् मतिमोह इति ॥

तथा च भवन्मतमूलं प्रवचनपरीक्षाकृदप्याह—तत् शृणु—**"अपच्चक्खाणकिरिया तयभावे वि य न देसविरईणं। नारंभकिरियारंभे पवट्टमाणाण सुमुणीणं" ४४ गाथा।** अस्या गाथाया ग्रन्थकृतः स्वोपज्ञावृत्तिर्लिख्यते—देशविरतानां श्रावकाणा तदभावेऽपि क्वचिदेकादशविरतिरधिकृत्य प्रत्याख्यानाभावेऽपि च अप्रत्याख्यानक्रिया न भवति। यतः—**'तत्थ णं जे ते संजयासंजया तेसि णं आदिमाओ तिन्नि किरियाओ कज्जंति'** इति

भगवत्या प्रथमशतके द्वितीयोद्देशके। अत्रारंभिकी १ पारिग्रहिकी २ मायाप्रत्ययिकी ३ अप्रत्याख्यानिकी ४ मिथ्यादर्शनप्रत्ययिकी ५ चेति। पंचक्रियाणां मध्ये आदिमास्तिस्रः आरंभिकी १ पारिग्रहिकी २ मायाप्रत्ययिकी चेति ३ तत्रैकादशानामविरतीनामप्रत्याख्यानेऽपि अप्रत्याख्यानक्रियाया अनुदयो भणितः। तथा च पुनरर्थे अप्यर्थे वा सुमुनीनां शोभना मुनयः साधवस्तेषां अप्रमत्तगुणस्थानकादारभ्य त्रयोदशगुणस्थानकं यावदारंभे प्रवर्तमानानामप्यारंभिकी क्रिया न भवति। यदागमः—**तत्थ णं जे ते अपमत्तसंजया तेसि णं एगा मायावत्तिया किरिया कज्जइ**ति भगवत्यां प्रथमशतके द्वितीयोद्देशके इत्यादि प्रवचनपरीक्षायां ४४ गाथाया विस्तरः ॥

अन्यच्च प्रवचनपरीक्षां कृत्वा यत् श्रीविजसेनसूरिभिरप्रमाणीकृतं सर्वज्ञशतकं चकार तत्रामर्ष एव हेतुरवसेयो नान्यो हेतुरतोऽमर्षस्य कारणं लिख्यते— भट्टारकपुरन्दरभट्टारकश्रीहीरविजयसूरिभिः शास्त्रविरुद्धपंचजल्पजल्पनविषये मिथ्यादुःकृतं बलाद्दापितं:

तत्र पञ्च जल्पा यथा संवत् १६४९ वर्षे पौषपौर्णिमायां पुष्यार्के च अहम्मदावादनगरे उपाध्यायश्रीधर्मसागरगणिभिर्लिख्यते—

मिच्छा मि दुक्कड देवानी विगति लिखीइ । मरी मरीचि संवंधिउं दुब्भासिएण इक्केण ए वचन दुर्भाषित कहीइ पणि उत्सूत्र न कहीइ एहवुं अम्हे कहता पणि श्राद्धप्रतिक्रमणसूत्र चूर्णि प्रमुख घणा ग्रंथनइं अनुसारि मरीचिनुं कविला इत्थंपि इहयंपि ए वचन उत्सूत्र जणाइ छइ । तथा अम्हे प्रवचन परीक्षामांहि ए मरीचिनुं वचन उत्सूत्र होइ एहवुं आण्युं छइ पणि ते सांभर्युं नहीं ते माटि ए विपरीत कहवाणुं होइ तेहनुं मिच्छा मि दुक्कडं । १ ।

तथा भगवती सूत्रनइं मेलि श्रीअभयदेवसूरिसंतानीय श्रीगुणचन्द्रसूरिकृत श्रीवीरचरित्रादिक ग्रन्थइं अनुसारिं जमालिनइं १५ भव जणाइ छइ ते माटि ए थकी विपरीत कहिउं होइ तेहनुं मिच्छा मि दुक्कडं । २ ।

तथा उत्सूत्र भाषीनइं नियमा अनंतां भव होइ एहवुं अम्हो कहता पणि श्रीभगवतीसूत्रमांहि जमालिनइं १५ भव कहिया पणि अनुसारि बीजाइ शास्त्रनइं अनुसारिं उत्सूत्र भाषीनइं संख्याता असंख्याता अनंता भव होइ इम जणाइ छइ ते माटि ए थकी विपरीत प्ररूपणाइं कहवाणुं होइ तेहनुं मिच्छा मि दुक्कडं । ३ ।

तथा केवलिना शरीर थकी त्रस थावर जीवनी विराधना न होइ अम्हे एहवुं कहता पणि श्रीआचारांगवृत्तिश्री-भगवतीसूत्रनइं अनुसारि जणाइ छइ जे केवलीना शरीर थकी त्रस थावर जीवनी विराधना होइ तो ना नहीं ते माटि ए विपरीत सद्दहिउं होइ–कहवाणुं होइ तेहनुं मिच्छा मि दुक्कडं । ४ ।

तथा १२ बोल आश्री जिम श्रीपूज्यइ आश दीधुं छइ ते थकी विपरीत कहवाणुं होइ तेहनुं मिच्छा मि दुक्कडं हवइ '५ ।

आज पछी श्रीपूज्यनी आज्ञा थकी विपरीत प्ररूपणा थाइ तु अम्हनई भगवनजी जे आश दिइ ते अम्हे करवुं अंगीकार करवुं सही ३।

| | | |
|---|---|---|
| अत्र पू० | पं. लब्धिसागरगणिमतं | १ |
| पू० | पं. दर्शनसागरगणिमतं | २ |
| पू० | पं. भक्तिसागरगणिमतं | ३ |
| पू० | पं. कुंअरसागरमतं | ४ |

अथैतन्मिथ्यादुःकृतं कुंभकारक्षुल्लकमिथ्यादुःकृतवद्विधाय तदनु श्रीसूरीणामादेशात् सूरतिबंदिरे समागत्य चेतसि चिन्तितामर्पस्वोत्सूत्रभाषितात्संजातहठः हठादेव च स्वयमेव कृतां प्रवचनपरीक्षाया ४४ गाथां अपच्चक्खाणा किरिया इति रूपां विसारयन् सर्वज्ञशतकं चकार मा श्रीहीरविजयसूरयोऽन्ये वा केचिज्जानन्तु इति धियावच्छन्नं रक्षितवान्। तदनु श्रीहीरविजयसूरयो महतामहेन मेवात-मेवाड-मरुस्थली-मालव-वागड-कच्छ-गूर्जरात्रादिदेशसंघैः सह श्रीशत्रुंजयतीर्थयात्रां विधाय द्वीपबंदिरासन्नोन्नतदुर्गे चतुर्मासकं चक्रुस्तदनु संजातासाध्यरोगा द्वितीयं चतुर्मासकं तत्रैव स्थिताः, संवत् १६५२ वर्षे भाद्रपद—शुक्लैकादश्यां कृतानशनाश्चित्तसमाधिभाजः स्वर्जग्मुः तच्चित्तासन्नाम्रवने भाद्रमासेऽपि फलदर्शनेन देवसान्निध्यमवगत्य सर्वे चमत्कारं प्रापुः। तदनु श्रीविजयसेनसूरयो गोमिथुन-

महिपमिथुनवधनिषेधमृतस्वमोचनमनुष्यबंदग्रहनिवारणस्फरन्मानप्राप्तसन्मानाः पातसाहि श्री ५ श्रीअकब्बरमहाराजाधिराजानुज्ञां प्राप्य सं. १६५३ वर्षे लाभपुरतः समागत्य श्रीस्तंभतीर्थे चतुर्मासकं चक्रुः, तच्चतुर्मासकपारणके श्रीसूरिवन्दनार्थं समागता उपाध्यायश्रीधर्मसागर-गणयस्तत्रैव स्थिता गाढमांद्यभाजः परलोकं प्राप्ताः। तदनु संवत् १६७१ वर्षे कुतश्चिद्गाढप्रछन्नरक्षितमपि सर्वज्ञशतकपुस्तकं प्राप्य

पू० उपाध्याय श्री शान्तिचंद्रगणि साषि (क्षि)
पू० पं० ज्ञानविमलगणि साषि
पू० पं० नयविमलगणि साषि
पू० पं० शिवसागरगणि साषि
पू० पं० लींबागणि साषि
पू० पं० लाभविजय साषि
पू० पं० सीहविमलगणि साषि
पू० पं० दीपविंगणि साषि
समस्त अहम्मदावाद संघ साषि
समस्त अहम्मदावादपुराना संघ साषि

श्रीविजयसेनसूरय उत्सूत्रनिराकरणाय सकलाहम्मदावादसंघसंमत्या सकलतपागच्छगीतार्थसंमत्या संवत् १६७१ वर्षे स्वाज्ञोल्लंघनपरं नेमिसा उपाध्यायश्रीलब्धिसागरगणि शिष्यं सर्वज्ञशतककृताशिष्यशिष्यं उपाध्यायपदग्रहणपूर्वकं गच्छान्निष्कास्य सर्वज्ञशतकमं प्रमाणीचक्रुः। तस्मिन्नेव वर्षे श्रीविजयसेनसूरिषु दिवं गतेषु सत्सु श्रीविजयदेवसूरयः संवत् १६७२ वर्षे श्रीपत्तननगरादासन्नचाणसमाग्रामे श्रीअहम्मदावादीयसंघ—श्रीपत्तनसंघ—श्रीस्तंभतीर्थीयसंघाग्रहेण स्वाज्ञामंगीकार्य तं गणमध्ये जगृहुः। एतच्च सर्वजनप्रतीतं गच्छभेदेऽप्ययमेव ग्रन्थो हेतुरिति सर्वं त्वमपि जानीषे। पुनरपि तत्शिष्यो भूत्वा लोकान् विप्रतारयसि

यदा चायमप्रमाणीकृतस्तदा तज्जल्पाकत्वं क्व गतमभूद्यदिदानींप्रादुर्भूतमिति सर्वज्ञशतकाऽप्रमाणकरणरीतिरपि लिख्यते—

यथा—श्रीहीरविजयसूरिगुरुभ्यो नमः ।

संवत् १६७१ वर्षे वैशाखसित-तृतीयाया श्रीअहम्मदावादनगरे श्रीविजयसेनसूरिभिर्लिख्यते—

' समस्तसाधु-साध्वी-श्रावक-श्राविकासमुदाययोग्यं

श्री ५ श्रीहीरविजयसूरिं जे बार १२ बोल प्रसाद करया छइ ते तिमज प्रमाण करवा। ते आशरी नवो अर्थ करीनइ कोणि विपरीत प्ररूपणा न करवी १।

तथा सर्वज्ञशतक ग्रन्थ सूत्र वृत्तिमांहि श्रीहीरविजयसूरि जे पांच बोलना मिच्छा मि दुक्कडा देवराव्या हता ते आश्री विपरीत प्ररूपणा सिद्धांतनइं अणमीलती लिखी छइ ते माटि सर्वज्ञशतकग्रन्थ अप्रमाण छइं। ए ग्रन्थ कुणइ वांचवो नहीं। तथा कुणि लिखाववो नहीं। जे वांचइ तथा लिखावइ तेहनइं विद्यमान गच्छनायकइं गच्छबाहिरनुं ठवको देवो। तथा श्रावक वांचइ तु श्रावकइं संघ बाहिरनुं ठवको देवु २।

तथा व्याख्यान विधि शतक सूत्रवृत्ति औष्ट्रिक मतोत्सूत्र दीपिका तद्बालावबोध प्रमुख ग्रन्थमांहि पणि केतलाइक शास्त्र विरुद्ध बोल छइ ते माटि तें ग्रन्थ गच्छनायकनी आज्ञा पूर्वक शोध्या विना कोणइं वांचवा नहीं।

ए आज्ञासहु कोणि मानवी, जे न मानइं तेहनइं गच्छनायकइं रूडी मेलि शीष देवी ॥

तथा जल्पसि तेन तवापि विद्यमानगच्छाधिराज—— श्रीविजयदेवसूरिभ्यो महान् दंडो भावीति विमृश स्वचित्ते ॥

| | | | |
|---|---|---|---|
| अत्र पू० श्रीविजयदेवसूरिमतं | १ | पू० पं० श्रीधनविजयगणिमतं | १४ |
| पू० उपाध्यायश्रीरत्नचंद्रगणिमतं | २ | पू० पं० श्रीजयविजयगणिमतं | १५ |
| पू० उपाध्यायश्रीमेघविजयगणिमतं | ३ | पू० पं० श्रीशुभविजयगणिमतं | १६ |
| पू० उपाध्यायश्रीसोमविजयगणिमतं | ४ | पू० पं० श्रीदेवविजयगणिमतं | १७ |
| पू० उपाध्यायश्रीभानुचंद्रगणिमतं | ५ | पू० पं० श्रीधनविजयगणिमतं | १८ |
| पू० उपाध्यायश्रीनंदिविजयगणिमतं | ६ | पू० पं० श्रीरामविजयगणिमतं | १९ |
| पू० उपाध्यायश्रीविजयराजगणिमतं | ७ | पू० पं० श्रीकीर्तिविजयगणिमतं | २० |
| पू० उपाध्यायश्रीधर्मविजयगणिमतं | ८ | पू० पं० श्रीकनकविजयगणिमतं | २१ |
| पू० उपाध्यायश्रीविवेकहर्षगणिमतं | ९ | पू० पं० श्रीकुशलविजयगणिमतं | २२ |
| पू० पं० श्रीदेवविजयगणिमतं पं० सीहविमलगणिमतं | १० | पू० पं० श्रीसौभाग्यविजयगणिमतं | २३ |
| पू० पं० श्रीविजयगणिमतं | ११ | पू० पं० श्रीधर्मचन्द्रगणिमतं | २४ |
| पू० पं० श्रीकनकविजयगणिमतं | १२ | पू० पं० श्रीरत्नकुशलगणिमतं | २५ |
| पू० पं० श्रीलाभविजयगणिमतं | १३ | पू० पं० श्रीविजयचंद्रगणिमतं | २६ |

पू० पं० श्रीगुणविजयगणिमतं २७
पू० पं० श्रीदेवविमलगणिमतं २८
पू० पं० श्रीराजसुन्दरगणिमतं २९
पू० पं० श्रीशान्तिविजयगणिमतं ३०
पू० पं० श्रीरामविजयगणिमतं ३१
पू० पं० श्रीविद्योदयगणिमतं ३२
पू० पं० श्रीलाभचन्द्रगणिमतं ३३
पू० पं० श्रीवेलर्षिगणिमतं ३४
पू० पं० श्रीसूरविजयगणिमतं ३५
पू० पं० श्रीभानुविजयगणिमतं ३६
पू० पं० श्रीजयविजयगणिमतं ३७
पू० पं० श्रीसोमकुशलगणिमतं ३८
पू० पं० श्रीविजयगणिमतं ३९
पू० पं० श्रीदेवचन्द्रगणिमतं ४०

पू० पं० श्रीकल्याणकुशलगणिमतं ४१
पू० पं० श्रीजयवंतर्षिगणिमतं ४२
पू० पं० श्रीमेरुविजयगणिमतं ४३
पू० पं० श्रीगुणहर्षगणिमतं ४४
पू० पं० श्रीपद्मविमलगणिमतं ४५
पू० पं० श्रीवीरसागरगणिमतं ४६
पू० पं० श्रीमाणिक्यसागरगणिमतं ४७
पू० पं० श्रीकीर्तिसागरगणिमतं ४८
पू० पं० श्रीश्रुतसागरगणिमतं ४९
पू० पं० श्रीकुंअरसागरगणिमतं ५०
पू० पं० श्रीगणिहेमसागरमतं ५१
पू० पं० श्रीगणिकनकसागरमतं ५२
पू० पं० श्रीगणि अभयसागरमतं ५३

अन्यच्च त्वं जानीषे केवलिनि सर्वथा जीववधसंभवं निराकुर्वन्नहं विशेषगुणारोपं करोमि, एतच्चिन्तनमपि मिथ्या। यतः—असतः सतः कथनं १, सतोऽसतः कथनम् २, उभे अपि मिथ्यैव ते त्वमत्रार्थे उत्सूत्रवाद्येव भवसि न सूत्रवादीति। एवं वदतस्तव यदुत्सूत्रवादित्वं न भवति तदा केवलिनि भक्तिं निषेधयतो दिगम्बरस्य निह्नवत्वं कथं स्यात्तेन भक्तिदोषं निराकुर्वता विशेषगुणारोप एव कृतस्तेन यथा तस्याऽसदारोपं कुर्वतो निह्नवत्वं तथा तवाप्यसद्गुणारोपं कुर्वत उत्सूत्रवादित्वं दुर्निवारमिति हितवाक्यं मत्वा स्वहितं कुरु येनेहलोके परस्मिन् लोकेऽपि च बोधिबीजावाप्तिः स्यादिति मंगलम्॥

इमां रीतिं त्वं चक्षुषा दृष्ट्वापि यथा सिद्धान्तपीयूषमहार्णवस्य।
सारं सुधां तत् परिगृह्य चक्रे, भूयादिदं दुर्मतसर्प्पसर्प्पद्विषापहारप्रवणं सुशास्त्रम् ॥ १ ॥

सामग्र्यभावात् किल पुस्तकानां, छद्मस्थभावान्मतितुच्छतायाः
मया ह्यनाभोगवशाद्यदत्र लिपीकृतं तद्विबुधैः सुशोध्यम् ॥ २ ॥

सिद्धान्तवाङ्मयोऽयं कुमततमोरत्नराजदीपरविः।
ग्रन्थोऽयं भवतान्मे तत्त्वार्थविवेचने च तु ॥ ३ ॥

श्रीरस्तु ॥

संवत् १६८० वर्षे कार्तिकमासे कृष्णपक्षे द्वादशी(१२)तिथौ रविवारे स्थंभवास्तव्यं ओदीच्यज्ञातीय–जोसी नानजीसुत–वशरामेन पुस्तकं लिखितं लेखकपाठकयोः शुभं भवतु ॥

वाच्यमानः श्रूयमाणः, पठ्यमानश्च सादरम् ।
लेख्यमानं पुस्तकेषु, ग्रन्थोऽयं मे प्रवर्तताम् ॥ १ ॥
सूर्याचन्द्रमसौ यावत्, यावत् सप्तधराधराः ।
यावत्तपागणस्तावत्, अयं जयतु पुस्तकः ॥ २ ॥

॥ इति श्रीकुमताहिविषमविषोत्तारजाङ्गुलीमन्त्रनामकं शास्त्रं संपूर्णम् ॥